# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

## ASIATIC SOCIETY OF BENGAL.

Nos. 64, 89, 172, 174, 178 and 184.

---

# THE APHORISMS OF THE VEDA'NTA,

By BA'DARA'YAṆA,

WITH

THE COMMENTARY OF S'ANKARA A'CHA'RYA AND THE GLOSS OF GOVINDA A'NANDA.

EDITED BY PAṆḌITA RÁMA NÁRÁYAṆA VIDYÁRATNA.

VOL. I.

ADHYA'YA I.—ADHYA'YA II. PA'DA II.

CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION PRESS.

1863.

# वादरायणप्रणीतं

## ब्रह्मसूत्रं नाम

# वेदान्तदर्शनम् ।

श्रीगोविन्दानन्दकृतया भाष्यरत्नप्रभाख्यया
टीकया भासितेन शाङ्करभाष्येण सहितम् ।

आसियाटिकाख्य-समाजानुमत्या
श्रीयुक्त-रामनारायण-विद्यारत्नेन
यत्नतः परिशोधितम् ॥

कलिकाताराजधान्यां
व्याप्टिष्ट मिशन् यन्त्रे
सि, वि, लूइस् साहेवेन मुद्रितम् ।
शकाब्दाः १७८५ । खीः १८६३ ।

# ADVERTISEMENT.

THIS Edition of the Vedánta Sútras was originally commenced by Dr. Röer, who published two fasciculi; but it was discontinued on the suspension of the Bibliotheca Indica in 1856. Its publication was resumed in 1861, but, as Dr. Röer had left India, the task of editing it was entrusted to Paṇḍit Ráma Náráyaṇa Vidyáratna. To ensure a correct text of the Commentary and Gloss, several MSS. have been compared,—of these an account is given in the Sanskrit Introduction. At the end of the work has been added the text of the Adhikaraṇa Málá of Bhárati-tírtha Yati, as this contains a useful summary of the different topics, with the arguments employed on both sides.

E. B. C.

*Secy. B. A. S.*

*Calcutta, August 17th,* 1863.

# रत्नप्रभाभासितशाङ्करब्रह्मसूत्रभाष्यस्य शुद्धिपत्रं।

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १ | २ | जनकजावरमनन्त- सुखाकृतिं | जनकजाङ्कमनन्त- सुखाकृतिं |
| १ | ११ | भाषास्मिताऽस्य | भासा स्मितास्य |
| २ | १७ | सस्यादि | शस्यादि |
| २ | २८ | प्रतिष्ठा काम | प्रतिष्ठाकाम |
| ३ | १७ | स्वाथ | स्वार्थ |
| ११ | २४ | लक्षण | लक्षणं |
| १४ | १७ | शून्यत्व | शून्यत्वं |
| १६ | १६ | व ते | वर्ण्यते |
| २५ | १४ | कर्म्मणा | कर्म्मणां |
| २६ | २८ | मुक्ति | मुक्तिः |
| २७ | २६ | प्रवृत्ति र्वेध | प्रवृत्तिर्वोध |
| २८ | ११ | प्रवर्त्यते | प्रवर्त्तते |
| ३३ | १७ | व्युत्पत्या | व्युत्पत्त्या |
| ३४ | १८ | शुक्तित्त्व | शुक्तित्व |
| ३५ | २८ | वदा | वेदा |
| ३५ | १० | विप्रतित्तीनां | विप्रतिपत्तीनां |
| ४० | १३ | पुरूष | पुरुष |
| ४२ | २१ | शास्वासु | शाखासु |
| ४६ | २२ | ज्ञात् | ज्ञानात् |
| ४८ | २७ | ज्ञात् | ज्ञानात् |
| ४८ | ५ | र्यत्व | र्यत्वं |
| ५० | २२ | दाद् | दीत् |
| ५१ | ५ | त्वाद् | त्वात् |
| ५२ | ८ | दीद् | दीत् |
| ५३ | ७ | तद् | तत् |

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ५६ | २२ | चाख | चाख |
| ५७ | ७।८ | र्प्यते | र्थ्यते |
| ५८ | ८ | ब्रह्मण | ब्रह्मण |
| ७१ | ६ | हननभाव | हननाभाव |
| ९१ | २४ | युक्त्यावभास | युक्त्याभास |
| ९६ | २२ | सगान्मुखः | सर्गोन्मुखः |
| ९९ | ५ | प्रपञ्चयिष्यतेर्न | प्रपञ्चयिष्यते न |
| | ११ | स्नात्त्वा | स्नात्वा |
| १०१ | १० | वन्न | वन्न |
| १०२ | २२ | ज्योतिष्ठोमे | ज्योतिष्टोमे |
| १०३ | १८ | विप्रलिप्सुईष्ट | विप्रलिप्सुरिष्ट |
| ११५ | १३ | बऊक्तत्वो | बऊकत्वो |
| ११९ | २२ | आनब्दमयो | आनन्दमयो |
| १२५ | ६ | वाङ्ममनस | वाङ्मनस |
| १४७ | ५ | मर्य्यादत्वं | मर्य्यादात्वं |
| | १४ | ष्ठत उपासीत | इत्युपासीत |
| १४८ | ८ | ग्टहीतव्यं | ग्रहीतव्यं |
| १५९ | १६ | कारसं | कारणं |
| १६० | १३ | रागादिभि | रागादिभिः |
| १६५ | २७ | प्रत्यक्ब्रह्म | प्रत्यग्ब्रह्म |
| १७३ | ११ | पुगरयं | पुनरयं |
| १७६ | ९ | तत्वमस्यहं | तत्त्वमस्यहं |
| १८० | १८ | पिबत् | पिवत् |
| १८३ | १० | द्रष्ठ्य | द्रष्टव्य |
| १९७ | ७ | द्रष्ट्रा | द्रष्टा |
| २०५ | ७ | दिवे | दिव्यो |
| २१९ | २२ | नेतव्यमितित्याह | नेतव्यमित्याह |

# मुखबन्धश्लोकपञ्चाशिका।



राममोहनरायेण ख-वेद-मुनि-भू-मिते।
शाकेऽङ्कितमिदं ब्रह्मसूत्रं भाष्यसमन्वितम्॥ १॥
ततः कालवशात्तस्य प्रचारे विरले सति।
डाक्तारैह्वार्डरोरेण मनो दध्रे तदङ्कने॥ २॥
दृष्टं तट्टीकया हीनं प्रायशोऽस्फुटमित्यतः।
सुबोधाय च तेनेष्टं सटीकस्यास्य मुद्रणम्॥ ३॥
ततः का नाम विख्याताऽद्वैतपक्षोपयोगिनी।
टीकाऽऽस्तेऽत्रेति जिज्ञासा जाता तद्धृदि भूयसा॥ ४॥
तदैकेति श्रुतं तेन भाष्यरत्नप्रभाख्यया।
वाराणसीसम्प्रदायादृताऽऽस्तेऽतीव विश्रुता॥ ५॥
विशेषतस्तैर्भाष्यस्याद्याध्यायद्वयमेतया।
टीकया पठ्यतेऽध्यायद्वयं च शिष्टमन्यया॥ ६॥
सा तु टीकाऽऽनन्दगिरिप्रणीता शेषसौष्ठवा।
शारीरकन्यायनिर्णयाख्यया विश्वविश्रुता॥ ७॥
ततस्तयोः का मुद्रार्हा भवेदिति समुत्सुकः।
शेषोक्ता सोऽशृणोत् टीकाऽन्यत्रेत्यङ्किष्यते ध्रुवम्॥ ८॥
भाष्यरत्नप्रभां तेनाङ्कितुं स कृतनिश्चयः।
प्रस्तावमकरोदत्रत्यासियाटिकसंसदि॥ ९॥

आसादिताज्ञः ख्रीष्टाब्दे अतीपुनगभूमिमे।
तस्याः प्रारभतेमं च स ग्रन्थं मुद्रयाऽङ्कितुं ॥ १० ॥
अस्य षोड़शपादस्य ग्रन्थस्य पादयुग्मके।
मुद्रितेऽसुस्थदेहोऽसौ स्वदेशमगमत्तदा ॥ ११ ॥
गते तु तस्मिंस्तत् कार्यं स्थितमेव हि तद्दशम्।
स्वसाधनमपेक्ष्येव तद्गुरुत्वेन हितार्थिना ॥ १२ ॥
सार्धात् संवत्सरादूर्द्धं स्वदेशात् स पराऽऽगतः।
किन्तु कार्यवशादत्रावस्थातुं प्रबभूव न ॥ १३ ॥
वङ्गदक्षिणपाश्चात्यभागावस्थानतः क्षमः।
प्रारब्धं साधितुं केनाप्युपायेन न चाभवत् ॥ १४ ॥
एवं कतिषु वर्षेषु व्यतीतेषु चिरागतः।
स लब्धवृत्तिरभवत् स्वदेशगमनोद्यतः ॥ १५ ॥
तदोक्तसंसदारूढं साध्यक्षं सभ्यमण्डलम्।
स मामन्ववृणत् तस्मिन् नियोजयितुमङ्गने ॥ १६ ॥
तस्मादध्यापकोऽध्यक्षः श्रीमान् कावेल ईदृशीं।
धुरं समर्पयामास मद्धस्ते तस्य कर्म्मणः ॥ १७ ॥
मया तदनुसारेण व्रतिनैतत् समाहितुम्।
न कृता त्रुटिरेतस्मिन् यथामतिकृतोहितम् ॥ १८ ॥
पाठभेदप्रकाशाय मयैतच्छोधनाय च।
पश्चाहृतानि पुस्तानि तेषां प्रत्येकमङ्कितम् ॥ १९ ॥
मु-लक्ष्मलक्षिता पुस्ती प्रथमा मुद्रिता हि सा।
वर्ध चिह्नाङ्किता पूता द्वितीया लिखिता मता॥ २० ॥

वर्धमानेश्वरसभासूरिणा सा सुरचिता ।
न्यायरत्नोपाधिना श्रीपद्मलोचनशर्मणा ॥ २१ ॥
का-ऽङ्काङ्किता तृतीया च लिखिता मोक्षधामतः ।
श्रीबाणेश्वरविद्यालङ्कारेणानीतरचिता ॥ २२ ॥
सो-चिह्नचिह्निता सोमाद्दटीपुस्तालयस्थिता ।
त्रिबल्ल्याकारतो हस्तलिखिता तूर्यपुस्तिका ॥ २३ ॥
एषा तु टीकया युक्ता भाष्यरत्नप्रभाख्यया ।
टीकामात्रा पञ्चमी च प्रोक्तचिह्ना समालया ॥ २४ ॥
एता वंगाक्षरैः सर्वाः केवलां पञ्चमीं विना ।
नागराक्षरसम्बद्धां पवित्रां लिखिता बुधैः ॥ २५ ॥
एतेषां पुस्तकानान्तु पञ्चानां तूर्यपुस्तकम् ।
एतन्मुद्रणकार्यार्थमादर्शत्वे वृतं मया ॥ २६ ॥
मुद्रायन्त्रगृहात् प्रूफपत्रमङ्कितमागतम् ।
आदिपञ्चमपुस्ताभ्यामादौ शोधितमञ्जसा ॥ २७ ॥
ततस्तन्मुद्रितायातं संशोधनपुरःसरम् ।
द्वितीयेन तृतीयेन पुस्तेनापि च संस्कृतम् ॥ २८ ॥
ततः पाठान्तरयुतं सशोधनमुपस्थितम् ।
नीतानेकसमालोकं मुद्रणार्थं स्थिरीकृतम् ॥ २९ ॥
विचारासङ्गतं पाठान्तरं निम्ने निवेशितम् ।
तत्तत्पुस्तकबोधार्थसङ्केताक्षरलक्षितम् ॥ ३० ॥
भाष्यरत्नप्रभा रम्या वस्तुतो नात्र संशयः ।
कष्टमत्र त्विदं भग्नशेषपादा तृतीयके ॥ ३१ ॥

सोऽयाद्दटीस्थितं पुस्तीद्वयमेवावलम्बितम् ।
अस्या मुद्रासमाधानक्षमं तस्मादवर्जितम् ॥ ३२ ॥
महोदयेन रोरेण श्रीमताऽप्यवलम्बितम् ।
तदेव पुस्तकद्वन्द्वमेतत्कार्यप्रवर्त्तिना ॥ ३३ ॥
प्रकृतार्थोपयोगित्वात् कामिनी भामिनीव सा ।
यद्यङ्गसौष्ठवाऽस्यास्तदभविष्यत् परं सुखम् ॥ ३४ ॥
इमामहीनसर्वाङ्गसौन्दर्य्यां कर्तुमुद्यमाः ।
विफलत्वं गता मेऽद्दं न दूयेऽत्र मनागपि ॥ ३५ ॥
अस्तीति सर्वविदितं विश्वकृत्सृष्टिकौशलम् ।
सर्वाङ्गसुन्दरं वस्तु सृष्टं नापि सुरच्यते ॥ ३६ ॥
तस्मादभाष्यसंचिन्नटिप्पनीमात्रदित्सुना ।
मया विज्ञापितः श्रीमानिति कावेलकोविदः ॥ ३७ ॥
विशदीक्रियतामेष पादोऽगत्याऽन्यटीकया ।
साकल्येन समादिष्टं तदा तेनेति मां प्रति ॥ ३८ ॥
अतो मयाऽऽनन्दगिरेष्टीका तत्र निवेशिता ।
सा तत्त्वबोधिनीपुस्यालयस्याऽऽदर्शरूपिणी ॥ ३९ ॥
एतद्ग्रन्थस्य सूत्रांशप्रणेता वादरायणः ।
सूत्राण्यस्मिन् पञ्चशतं पञ्चपञ्चाशदुत्तरम् ॥ ४० ॥
भाष्यभागो भगवता प्रणीतः शङ्करेण तु ।
भाष्यरत्नप्रभाकारी गोविन्दानन्दपण्डितः ॥ ४१ ॥
सन्त्यस्य त्रीणि नामानि सूत्रान्तानि यथाक्रमम् ।
ब्रह्मवेदान्तशारीरकादीनि कल्पितानि च ॥ ४२ ॥

तथैव मीमांसान्तानि त्रीण्यन्यानि यथाक्रमम् ।
पूर्ववत्तत्तदादीनि नामानि कल्पितानि च ॥ ४३ ॥
तथा व्यवहृते अन्ये वर्त्तेते नामनी शुभे ।
एकं ब्रह्मविचाराख्यं न्यायाधिकरणं परम् ॥ ४४ ॥
न्यायनामान्तरैश्चाधिकरणैः ख-भ-भूमितैः ।
वेदान्तवाक्यतात्पर्य्यैर्ग्रन्थोऽयं भागमागतः ॥ ४५ ॥
अस्याधिकरणव्यूहश्लोकसंग्रहरूपिणी ।
कस्यचिद्भारतीतीर्थाभिधस्यास्ते यतेः कृतिः ॥ ४६ ॥
सा तत्त्वबोधिनीयन्त्रे सटीकाऽनूदिताऽङ्किता ।
आनन्दचन्द्रवेदान्तवागीशेन च संस्कृता ॥ ४७ ॥
साऽप्येतत्सूत्रभाष्यीयनिखिलार्थोपयोगिनी ।
यत्नतो दर्शनीयेतीतः परं समपुद्यत ॥ ४८ ॥
सा त्वत्र गौरवभिया मूलमात्रैव मुद्रिता ।
तदाद्यानुक्रमणिकाश्लोकानां दशकं विना ॥ ४९ ॥
मूलश्लोकार्थसन्देहसन्दोहोद्घाटकुञ्चिका ।
विवृतिर्दर्शनीया चेत्, का चिन्ता, सा न दुर्लभा ॥ ५० ॥

फोर्ट उइलियम् कालेज ॥
शकाब्दे १७८५ ।

श्रीरामनारायण शर्म्मणः ।

# ब्रह्मसूत्रीयषोडशपादार्थदर्शनं

## निर्घण्टपत्रम् ।


| प्रतिपाद्यविषयाः । | अध्यायाङ्काः । | पादाङ्काः । |
|---|---|---|
| सुस्पष्टब्रह्मबोधकश्रुतिवाक्यानां समन्वयः, .. .. | १ | १ |
| उपास्य ब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः, .. | १ | २ |
| ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिवाक्यानां समन्वयः, .. | १ | ३ |
| अव्यक्तादिसन्दिग्धपदमात्राणामेव समन्वयः, .. | १ | ४ |
| साङ्ख्ययोगकाणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयस्य विरोधपरिहारः, .. .. | २ | १ |
| साङ्ख्यादिमतानां दुष्टत्वप्रदर्शनं, .. .. .. | २ | २ |
| पूर्वभागेण पञ्चमहाभूतश्रुतीनां उत्तरभागेण च जीवश्रुतीनां परस्परविरोधपरिहारः, .. .. | २ | ३ |
| लिङ्गशरीरश्रुतीनां विरोधपरिहारः, .. .. | २ | ४ |
| जीवस्य परलोकगमनागमनविचारपूर्वकवैराग्यनिरूपणं, .. .. .. .. .. .. .. | ३ | १ |
| पूर्वभागेण त्वं-पदार्थस्य उत्तरभागेण च तत्-पदार्थस्य च शोधनं, .. .. .. .. .. .. | ३ | २ |

| प्रतिपाद्यविषयाः। | अध्यायाङ्काः। | पादाङ्काः। |
| --- | --- | --- |
| सगुणविद्यासु गुणोपसंहारस्य, निर्गुणे ब्रह्मणि अपुनरुक्तपदोपसंहारस्य च निरूपणम्, .. .. | ३ | ३ |
| निर्गुणज्ञानस्य बहिरङ्गसाधनभूतानां आश्रमयज्ञादीनां, अन्तरङ्गसाधनभूतानां च शमदमश्रवणमननादीनां निरूपणं, .. .. .. .. | ३ | ४ |
| श्रवणाद्यावृत्त्या निर्गुणं, उपासनया सगुणं वा ब्रह्म साक्षात्कृतवतो जीवतः पुण्यपापलेपविनाशलक्षणाया मुक्तेरभिधानं, .. .. .. | ४ | १ |
| म्रियमाणस्य उत्क्रान्तिप्रकारदर्शनं, .. .. .. | ४ | २ |
| सगुणब्रह्मविदो मृतस्योत्तरमार्गाभिगमनं .. .. | ४ | ३ |
| पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तेः, उत्तरभागेण च सगुणब्रह्मविदो ब्रह्मलोकस्थितेर्निरूपणं,.. .. .. .. .. .. .. | ४ | ४ |

# व्यासाधिकरणार्थदर्शनं निर्घण्टपत्नम्।

## समन्वयाख्यप्रथमाध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सूत्राङ्काः। | अधिकरणाङ्काः। |
|---|---|---|
| ब्रह्मणो विचार्यत्वं, .. .. .. .. | १ | १ |
| ब्रह्मणो लक्ष्यत्वं, .. .. .. .. .. | २ | २ |
| ब्रह्मणो वेदकर्तृत्वं, } १ वर्णकं,<br>ब्रह्मणो वेदैकमेयता, } २ वर्णकं, .. .. | ३ | ३ |
| वेदान्तानां ब्रह्मबोधकत्वं, } १ वर्णकं,<br>वेदान्तानां ब्रह्मण्यवसितत्वं, } २ वर्णकं, .. | ४ | ४ |
| प्रधानस्य जगत्कर्तृत्वाभावकथनं, .. .. | ५-११ | ५ |
| आनन्दमयकोषस्य परमात्मत्वं, } १ वर्णकं,<br>ब्रह्मण आनन्दमयजीवाधारत्वं, } २ वर्णकं, | १२-१९ | ६ |
| आदित्यान्तर्गतहिरण्मयपुरुषस्येश्वरत्वं, | २०-२१ | ७ |
| परब्रह्मण आकाशशब्दवाच्यत्वं, .. .. | २२ | ८ |
| ब्रह्मण आकाशशब्दवत् प्राणशब्दवाच्यत्वं,.. | २३ | ९ |
| परब्रह्मणो ज्योतिःशब्दवाच्यत्वं, .. .. | २४-२७ | १० |
| ब्रह्मणः प्राणशब्दप्रतिपाद्यत्वं, .. .. | २८-३१ | ११ |


---

## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| ब्रह्मण उपास्यत्वं, .. .. .. .. | १-८ | १ |
| ब्रह्मणो जगत्कर्तृत्वं, .. .. .. .. | ९-१० | २ |
| चेतनयोर्जीवेश्वरयोर्हृद्गुहागतत्वं,.. .. | ११-१२ | ३ |

| प्रतिपाद्यविषयाः। | सूत्र० | अधि० |
| --- | --- | --- |
| छायाजीवान्यदेवान् हित्वा परब्रह्मण एवोपास्यत्वं, .. .. .. .. | १३-१७ | ४ |
| प्रधानजीवेतरस्येश्वरस्यैवान्तर्यामिशब्दवाच्यत्वं, | १८-२० | ५ |
| प्रधानजीवौ निराकृत्येश्वरस्य भूतयोनित्वं, | २१-२३ | ६ |
| ब्रह्मणो वैश्वानरशब्दवाच्यत्वं, .. .. | २४-३२ | ७ |

# प्रथमाध्यायस्य तृतीयपादे।

| | | |
| --- | --- | --- |
| सूत्रात्महिरण्यगर्भप्रधानभोक्तृजीवेश्वराणां मध्ये केवलमीश्वरस्यैव सर्वाधिष्ठानभूतत्वं, .. .. .. | १-७ | १ |
| प्राणपरेशयोर्मध्ये परेशस्यैव सत्यशब्देन श्रेष्ठत्वं, .. | ८-९ | २ |
| प्रणवब्रह्मणोर्मध्ये ब्रह्मण एवाक्षरशब्दवाच्यत्वं, .. .. | १० १२ | ३ |
| अपर-परब्रह्मणोर्मध्ये परब्रह्मण एवत्रिमात्रेण प्रणवेन ध्येयत्वं, .. .. .. .. .. .. .. | १३ | ४ |
| दहराकाशत्वेन प्रतीयमानानां वियज्जीवब्रह्मणां मध्ये ब्रह्मण एव तदाकाशवाच्यत्वं, .. .. .. .. | १४-१८ | ५ |
| अक्षिपुरुषत्वेनापाततः प्रतीयमानयोर्जीवपरेशयोः परेशस्यैव तत्पदवाच्यत्वं,.. .. .. .. .. | १९ २१ | ६ |
| जगत्प्रकाशत्वेनोपलब्धयोः सूर्यादितेजःपदार्थचैतन्ययोश्चैतन्यस्यैव तत्प्रकाशत्वं, .. .. .. .. .. | २२-२३ | ७ |
| जीवात्मपरमात्मनोर्मध्ये परमात्मन एवाङ्गुष्ठमात्रपुरुषशब्देन प्रतिपादनं, .. .. .. .. .. | २४-२५ | ८ |
| देवानां निर्गुणविद्यायामधिकारनिरूपणं, .. .. | २६-३३ | ९ |
| शूद्राणां वेदानधिकारकथनपूर्वकः शोकाकुलत्वेन शूद्रनामसमात्रधारिणो जानश्रुतेर्वेदविद्याधिगमः, | ३४ ३८ | १० |

| प्रतिपाद्यविषयाः । | सूत्र० | अधि० |
|---|---|---|
| प्राणत्वेनाम्नातानां वज्रवायुपरेशानां मध्ये परेशस्यैव ताट्टशप्राणशब्दवाच्यत्वं, .. .. .. .. .. | ३९ | ११ |
| ब्रह्मणः परत्वज्योतिष्ट्वे, .. .. .. .. .. | ४० | १२ |
| ब्रह्मण आकाशशब्दवाच्यत्वं, .. .. .. .. | ४१ | १३ |
| ब्रह्मणो विज्ञानमयशब्दवाच्यत्वं, .. .. .. | ४२-४३ | १४ |


## उक्ताध्यायस्य चतुर्थपादे ।


| | | |
|---|---|---|
| कारणावस्थापन्नस्य स्थूलशरीरस्यैवाव्यक्तशब्दवाच्यत्वं, | १-७ | १ |
| श्रुतिप्रमितप्रकृति-स्मृतिसम्मतप्रधानयोर्मध्ये ताट्टशप्रकृतेरेवाजाशब्दवाच्यत्वं, .. .. .. .. | ८-१० | २ |
| प्राणचक्षुःश्रोत्रमनोऽन्नानां पञ्चपञ्चजनशब्दवाच्यत्वं, | ११-१३ | ३ |
| ब्रह्मप्रतिपादकवेदान्तवाक्यसमन्वयानां युक्तियुक्तत्वं, | १४-१५ | ४ |
| प्राणजीवपरात्मनां मध्ये परात्मन एव कृत्स्नजगत्कर्तृत्वेन बालाकिना ब्रह्मत्वेनोक्तानां षोडशपुरुषाणां कर्तृत्वनिराकरणं,.. .. .. .. .. .. | १६ १८ | ५ |
| संशयितजीवपरमात्मनोर्मध्ये परमात्मन एव श्रवणमननादिविषयीकर्तृत्वं, .. .. .. .. .. | १९-२२ | ६ |
| ब्रह्मणो निमित्तोपादानोभयकारणत्वं, .. .. .. | २३-२७ | ७ |
| परमाणुशून्यादीनां श्रुत्युक्तानामपि जगत्कारणत्वमपहाय ब्रह्मण एव प्रतिनियतजगत्कारणत्वं, .. | २८ | ८ |


इति प्रथमाध्यायस्य समाप्तं ॥ * ॥

## अविरोधाख्यद्वितीयाध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| साङ्ख्यस्मृत्या वेदसङ्कोचस्यायुक्तत्वं, .. .. .. .. | १-२ | १ |
| योगस्मृत्याऽपि वेदसङ्कोचस्यायुक्तत्वं, .. .. .. | ३ | २ |
| वैलक्षण्याख्ययुक्तिद्वाराऽपि वेदान्तवाक्यानामबाध्यत्वं, | ४-११ | ३ |
| काणादबौद्धादीनां स्मृतियुक्तिभ्यामपि वेदवाक्यानामबाध्यत्वं, .. .. .. .. .. .. .. | १२ | ४ |
| भोक्तृभोग्यभेदवतोऽपि परब्रह्मणोऽद्वैतत्वस्याबाधत्वं, | १३ | ५ |
| ब्रह्मणि भेदाभेदयोर्व्यवहारिकत्वमद्वितीयत्वस्य च तात्त्विकत्वं, .. .. .. .. .. .. .. | १४-२० | ६ |
| सर्वज्ञत्वेन जीवसंसारमिथ्यात्वं स्वनिर्लेपत्वं च पश्यतः परमेश्वरस्य न हिताहितभागदोषः, .. .. .. | २१ २३ | ७ |
| अद्वितीयस्यापि ब्रह्मणः क्रमेण नानाकार्याणां सृष्टिसम्भावना, .. .. .. .. .. .. .. | २४-२५ | ८ |
| ईश्वरस्योपादानरूपपरिणामिकारणत्वव्यवस्थापनं, .. | २६ २९ | ९ |
| ईश्वरस्याशरीरित्वेऽपि मायावित्वं, .. .. .. | ३०-३१ | १० |
| नित्यतृप्तस्येश्वरस्यापि प्रयोजनं विनाऽशेषजगदुत्पादनं, | ३२-३३ | ११ |
| कर्मनियन्त्रितानां जीवानां सुखदुःखनिमित्तमात्रस्य जगत् संहरतश्च नैर्घृण्यदोषाभावः, .. .. | ३४ ३६ | १२ |
| निर्गुणस्यापि ब्रह्मणो विवर्त्तरूपेण प्रकृतित्वसिद्धिः, .. | ३७ | १३ |


## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| साङ्ख्यानुमतप्रधानस्य जगद्धेतुत्वखण्डनं,.. .. .. | १ १० | १ |
| असदृशोद्भवे काणाददृष्टान्तस्यास्तित्वं, .. .. .. | ११ | २ |
| परमाणूनां संयोगेन जगदुत्पत्तेर्युक्तिविरुद्धत्वं, .. | १२ १७ | ३ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
| --- | --- | --- |
| ईश्वराद्भिन्नानां बाह्यवस्त्वस्तित्ववादिबौद्धविशेषसम्मतानां परमाणूनां शब्दस्पर्शादीनाञ्च जगदुत्पादकत्वमतखण्डनं, .. .. .. .. .. .. .. | १८-२७ | ४ |
| विज्ञानवादिबौद्धसम्मतविज्ञानस्य जगत्कर्तृत्वादिखण्डनं, .. .. .. .. .. .. .. | २८-३२ | ५ |
| जीवादिसप्तपदार्थवादिनां बौद्धान्तराणां मतखण्डनं, | ३३-३६ | ६ |
| तटस्थेश्वरवादस्यायुक्तत्वं, .. .. .. .. .. | ३७-४१ | ७ |
| जीवोत्पत्त्यादेरयुक्तत्वं, .. .. .. .. .. | ४२-४५ | ८ |


## उक्ताध्यायस्य तृतीयपादे।


| | | |
| --- | --- | --- |
| वेदान्तवादिमते आकाशस्यानित्यत्वकथनं, .. .. | १-७ | १ |
| स्वरूपवतो ब्रह्मणो वायोरुत्पत्तिकथनं, .. .. .. | ८ | २ |
| सद्रूपस्य ब्रह्मणोऽजन्यत्वं जगज्जनकत्वञ्च, .. .. | ९ | ३ |
| कार्यकारणयोरभेदेन वायुभूतस्य ब्रह्मणस्तेजःसृष्टिः, | १० | ४ |
| वेदोक्ततेजोरूपब्रह्मणो जलोत्पत्तिसिद्धिः, .. .. | ११ | ५ |
| छान्दोग्योपनिषदुक्तजलोत्पन्नान्नस्य पृथिव्यर्थकत्वं, .. | १२ | ६ |
| पूर्वपूर्वकार्योपाधिकाद्ब्रह्मण उत्तरोत्तरकार्योत्पत्तिसिद्धिः, .. .. .. .. .. .. .. | १३ | ७ |
| लयकाले पृथिव्यादीनां विपरीतक्रमकल्पनं .. .. | १४ | ८ |
| प्राणादीनां भूतेष्वन्तर्भावान्न तेषां सृष्टिक्रमभङ्गः, .. | १५ | ९ |
| वपुषो जन्ममरणयोर्मुख्यत्वेन जीवस्यैतयोर्भाक्तत्वं, .. | १६ | १० |
| जीवजन्मन औपाधिकत्वेन तस्य वस्तुतो नित्यत्वं, .. | १७ | ११ |
| जीवस्याचिद्रूपत्वखण्डनपूर्विका तच्चिद्रूपत्वसिद्धिः, .. | १८ | १२ |
| जीवस्याणुत्वखण्डनपूर्वकं तत्सर्वगत्वप्रतिपादनं, .. | १९-३२ | १३ |

| प्रतिपाद्यविषयाः। | सू०। | अधि० |
|---|---|---|
| जीवस्याकर्तृत्वनिरसनपूर्वकं तत्कर्तृत्वप्रतिपादनं, .. | ३३ ३९ | १४ |
| जीवकर्तृत्वस्याध्यस्तत्वेनावास्तविकत्वं, .. .. .. | ४० | १५ |
| जीवस्येश्वरप्रवृत्तत्वेन न रागप्रवृत्तत्वं, .. .. .. | ४१-४२ | १६ |
| औपाधिककल्पनैर्जीवेशयोर्जीवानाञ्च परस्परं व्यवहारव्यवस्था, .. .. .. .. .. .. | ४३-५३ | १७ |

## उक्ताध्यायस्य चतुर्थपादे।

| | | |
|---|---|---|
| इन्द्रियाणामनादित्वनिराकरणपूर्वकं तेषामात्मसमुत्पन्नत्वं, .. .. .. .. .. .. .. .. | १-४ | १ |
| इन्द्रियाणामेकादशसङ्ख्याकत्वस्य वेदान्तसम्मतत्वं, .. | ५-६ | २ |
| साङ्ख्यसम्मतेन्द्रियसर्वगत्वनिराकरणपूर्वकं तेषां परिच्छिन्नत्वकथनं, .. .. .. .. .. .. | ७ | ३ |
| प्राणस्यानादित्वखण्डनपूर्वकं तदुत्पत्तिसमाधानं, .. | ८ | ४ |
| प्राणवायोः स्वतन्त्रताकथनं, .. .. .. .. | ९-१२ | ५ |
| प्राणस्य समष्टिरूपेणाधिदैविकी विभुता आध्यात्मिकी तु तस्याल्पताऽदृश्यता चेन्द्रियवदिति, .. .. | १३ | ६ |
| इन्द्रियगणस्य देवताविशेषाधीनत्वकथनं, .. .. | १४-१६ | ७ |
| विलक्षणत्वेन प्राणादिन्द्रियाणां पृथक्त्वं, .. .. | १७-१९ | ८ |
| सर्वजगत्सर्जने जीवस्याशक्तत्वादीशस्यैव सर्वशक्तिमत्त्वात् तस्यैव तन्निर्मातृत्वं, .. .. .. .. .. | २०-२२ | ९ |

इति द्वितीयाध्यायस्य समाप्तं॥ ※॥

## साधनाख्यतृतीयध्यायस्य प्रथमपादे।

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| जीवस्य भाविशरीरबीजरूपसूक्ष्मभूतवेष्टितस्यैवेतो गमनं.. .. .. .. .. .. .. .. | १-७ | १ |
| कर्मान्तरैः सानुशयस्य जीवस्य लोकान्तरारोहणं, .. | ८-११ | २ |
| पापिनां याम्यलोकगमनं, .. .. .. .. .. | १२-२१ | ३ |
| अवरोहिणो जीवस्य वियदादिसमानत्वं, .. .. | २२ | ४ |
| स्वर्गादवतरणकाले स्वर्ग-वृष्टि-पृथिवी-पुरुष-योषित्सु क्रमशो जनिष्यतो जीवस्य स्वर्गे वृष्टौ च जन्मनि त्वरा, तदितरेषु च जन्मनि विलम्ब इति, .. | २३ | ५ |
| सस्यादौ जीवस्य न मुख्यजन्म किन्तु संश्लेषमात्रमिति, | २४-२७ | ६ |

## उक्ताध्यायस्य द्वितीयपादे।

| | | |
|---|---|---|
| स्वप्नसृष्टेर्मिथ्यात्वकथनं .. .. .. .. .. | १-६ | १ |
| सुषुप्तिस्थानरूपस्य हृत्स्थब्रह्मण एकत्वस्थापनं, .. .. | ७-८ | २ |
| स्वप्नावस्थितस्यैव जीवस्य तस्मात् समुद्बोधो नापरस्येति, | ९ | ३ |
| मूर्च्छाया जाग्रदाद्यवस्थान्तरभिन्नत्वं, .. .. .. | १० | ४ |
| ब्रह्मणो नीरूपभावस्य वेदान्तसम्मतत्वं,.. .. .. | ११-२१ | ५ |
| ब्रह्मणो निषेधातीतत्वेन सत्यत्वस्थापनं, .. .. .. | २२-३० | ६ |
| ब्रह्मणोऽन्यस्यावस्तुत्वव्यवस्थापनं, .. .. .. .. | ३१-३७ | ७ |
| कर्मफलोत्पत्तिं प्रति ईश्वरस्यैव कर्तृत्वं नापूर्वस्येति, .. | ३८-४१ | ८ |

| प्रतिपाद्यविषयाः । | सू० । | अधि० |
|---|---|---|
| जीवस्याकर्तृत्वनिरसनपूर्वकं तत्कर्तृत्वप्रतिपादनं, .. | ३३ ३९ | १४ |
| जीवकर्तृत्वस्याध्यस्तत्वेनावास्तविकत्वं, .. .. .. | ४० | १५ |
| जीवस्येश्वरप्रवर्त्तत्वेन न रागप्रवृत्तत्वं, .. .. .. | ४१-४२ | १६ |
| औपाधिककल्पनैर्जीवेशयोर्जीवानाञ्च परस्परं व्यवहारव्यवस्था, .. .. .. .. .. .. | ४३-५३ | १७ |

---

## उक्ताध्यायस्य चतुर्थपादे ।

| | | |
|---|---|---|
| इन्द्रियाणामनादित्वनिराकरणपूर्वकं तेषामात्मसमुत्पन्नत्वं, .. .. .. .. .. .. .. .. | १-४ | १ |
| इन्द्रियाणामेकादशसङ्ख्याकत्वस्य वेदान्तसम्मतत्वं, .. | ५-६ | २ |
| साङ्ख्यसम्मतेन्द्रियसर्वगत्वनिराकरणपूर्वकं तेषां परिच्छिन्नत्वकथनं, .. .. .. .. .. .. | ७ | ३ |
| प्राणस्यानादित्वखण्डनपूर्वकं तदुत्पत्तिसमाधानं, .. | ८ | ४ |
| प्राणवायोः स्वतन्त्रताकथनं, .. .. .. .. | ९-१२ | ५ |
| प्राणस्य समष्टिरूपेणाधिदैविकी विभुता आध्यात्मिकी तु तस्याल्पताऽदृश्यता चेन्द्रियवदिति, .. .. | १३ | ६ |
| इन्द्रियगणस्य देवताविशेषाधीनत्वकथनं, .. .. | १४-१६ | ७ |
| विलक्षणत्वेन प्राणादिन्द्रियाणां पृथक्त्वं, .. .. | १७-१९ | ८ |
| सर्वजगत्सर्जने जीवस्याशक्तत्वादीशस्यैव सर्वशक्तिमत्त्वात् तस्यैव तन्निर्मातृत्वं, .. .. .. .. .. | २०-२२ | ९ |

इति द्वितीयाध्यायस्य समाप्तं ॥ ॥

## साधनाख्यतृतीयध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| जीवस्य भाविशरीरबीजरूपसूक्ष्मभूतवेष्टितस्यैवेतो गमनं.. .. .. .. .. .. .. .. | १-७ | १ |
| कर्मान्तरैः सानुशयस्य जीवस्य लोकान्तरारोहणं, .. | ८-११ | २ |
| पापिनां याम्यलोकगमनं, .. .. .. .. .. | १२-२१ | ३ |
| अवरोहिणो जीवस्य वियदादिसमानत्वं, .. .. | २२ | ४ |
| स्वर्गादवतरणकाले स्वर्ग-वृष्टि-पृथिवी-पुरुष-योषित्सु क्रमशो जनिष्यतो जीवस्य स्वर्गे वृष्टौ च जन्मनि त्वरा, तदितरेषु च जन्मनि विलम्ब इति, .. | २३ | ५ |
| सस्यादौ जीवस्य न मुख्यजन्म किन्तु संश्लेषमात्रमिति, | २४-२७ | ६ |


## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| स्वप्नसृष्टेर्मिथ्यात्वकथनं .. .. .. .. .. | १-६ | १ |
| सुषुप्तिस्थानरूपस्य हृत्स्थब्रह्मण एकत्वस्थापनं, .. .. | ७-८ | २ |
| स्वप्नावस्थितस्यैव जीवस्य तस्मात् समुद्बोधो नापरस्येति, | ९ | ३ |
| मूर्च्छाया जाग्रदाद्यवस्थान्तर्भिन्नत्वं, .. .. .. | १० | ४ |
| ब्रह्मणो नीरूपभावस्य वेदान्तसम्मतत्वं,.. .. .. | ११-२१ | ५ |
| ब्रह्मणो निषेधातीतत्वेन सत्यत्वस्थापनं, .. .. .. | २२-३० | ६ |
| ब्रह्मणोऽन्यस्यावस्तुत्वव्यवस्थापनं, .. .. .. .. | ३१-३७ | ७ |
| कर्मफलोत्पत्तिं प्रति ईश्वरस्यैव कर्तृत्वं नापूर्वस्येति, .. | ३८-४१ | ८ |

# उक्ताध्यायस्य तृतीयपादे ।


| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| छान्दोग्यबृहदारण्यकश्रुत्युक्तयोः पञ्चाग्निविद्योपासनयोः विध्यनुष्ठानफलसाम्येनैकत्वं, | १-४ | १ |
| गुणोपसंहारस्य कर्तव्यत्वं, | ५ | २ |
| छान्दोग्यकाण्वशाखयोरुद्गीथविद्याभेदकथनं, | ६-८ | ३ |
| ब्रह्मदृष्टेर्हेतुत्वेनाक्षरोद्गीथयोरेकत्वसम्पादनं, | ९ | ४ |
| वशिष्ठत्वादिगुणानामुपसंहर्तव्यत्वं, | १० | ५ |
| आनन्दसत्यत्वादीनां ब्रह्मगुणानां प्रतिपत्तिफलत्वेन सर्वशाखासु समानत्वात् व्यवस्थापकविध्यभावाच्च तेषामुपसंहर्तव्यत्वं, | ११-१३ | ६ |
| पुरुषज्ञानस्य संसारकारणात्, ज्ञाननिवर्तकत्वात् पुरुषस्यैव वेद्यत्वं, | १४-१५ | ७ |
| ईश्वरस्यैवात्मशब्दवाच्यत्वं न विराज इति, | १६-१७ | ८ |
| काण्वछान्दोग्यषष्ठयोर्द्वयोर्वस्त्वेकत्वं, | १८ | ९ |
| प्राणोपासनं प्रति प्राणविद्याप्राप्तयोरनग्नताबुद्ध्याचमनयोः अनग्नताबुद्धेरेव विधेयत्वं, | १९ | १० |
| काण्वानामग्निरहस्यब्राह्मणबृहदारण्यकयोः पठितायाः शाण्डिल्यविद्याया एकविधात्वं, | २०-२२ | ११ |
| अहरित्यादित्यगतस्याहमित्यक्षिगतस्य च वेद्यपुरुषस्यैकत्वेऽपि स्थानविशेषे तन्नामविशेषस्य युक्तत्वं, | २३ | १२ |
| विद्यैकत्वाभावात् सम्भृत्यादीनां गुणानां शाण्डिल्यविद्यादिषु अनुपसंहार्यत्वं | २४ | १३ |
| तैत्तिरीयकताण्डिनोः पुरुषविद्यायाः पृथक्त्वं. | २५ | १४ |
| वेदमन्त्रप्रवर्ग्यादीनां विद्यानङ्गत्वं, | २६ | १५ |

| प्रतिपाद्यविषयाः। | | सू० | अधि० |
|---|---|---|---|
| अर्थवादत्वेन पापपुण्ययोरुपायनस्य हानावुपसंहर्तव्यत्वं, | १ वर्णकं | २७-२८ | १६ |
| पापपुण्यविधूननस्य हानार्थकत्वमेव न चालनार्थकत्वं, .. | २ वर्णकं | | |
| मरणात् प्राक् उपास्ये साक्षात्कृते सुकृतदुष्कृतक्षयः, .. .. | ३ वर्णकं | | |
| उपासकस्यैवार्चिरादिमार्गो न ज्ञानिन इत्यस्य व्यवस्था, | | २९-३० | १७ |
| सर्वासूपासनासु उत्तरमार्गविधानं, .. .. .. | | ३१ | १८ |
| ब्रह्मतत्त्वज्ञानिनां मुक्तिर्नियता न तु पाक्षिकीत्यस्य प्रतिपादनम्, .. .. .. .. .. .. .. | | ३२ | १९ |
| आत्मस्वरूपलक्षकाणां निषेधानां परस्परोपसंहर्तव्यत्वम्, .. .. .. .. .. .. .. | | ३३ | २० |
| ऋतं पिबन्ताविति द्वा सुपर्णाविति च मन्त्रयोर्विद्यैकत्वम्, .. .. .. .. .. .. .. | | ३४ | २१ |
| एकशाखास्थयोः उषस्तकहोलयोर्ब्राह्मणयोर्विद्यैक्यप्रतिपादनम्, .. .. .. .. .. .. .. | | ३५-३६ | २२ |
| उपासनार्थं पृथक्त्वेनोपास्यस्य द्वैधज्ञानम्, ... .. | | ३७ | २३ |
| सत्यविद्याया एकत्वप्रतिपादनम्,.. .. .. .. | | ३८ | २४ |
| दहराकाशहार्दाकाशयोरुपसंहर्तव्यत्वम्, .. .. | | ३९ | २५ |
| उपासकस्य भोजने प्राणाहुतिलोपापत्तिः, .. .. | | ४०-४१ | २६ |
| उद्गीथकर्माङ्गीभूतदेवतोपासनाया अनियतत्वं, .. | | ४२ | २७ |
| संवर्गविद्योक्ताधिदेववाय्वध्यात्मप्राणयोरनुचिन्तनस्य पृथक्त्वम्, .. .. .. .. .. .. .. | | ४३ | २८ |
| मनश्चिदादीनां स्वतन्त्रविद्यात्वस्वीकारः, .. .. | | ४४-५२ | २९ |
| भौतिकस्यात्मत्वनिराकरणपूर्वकतदन्यस्यात्मत्वप्रतिपादनम्, .. .. ... .. .. .. .. | | ५३-५४ | ३० |

| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| ऐतरेयगतोक्थोपासनायां पृथिव्यादिदृष्टेः कौषीतक्यामपि समानत्वं, | ५५-५६ | ३१ |
| विराड्रूपवैश्वानरस्य कृत्स्नस्यैव ध्यातव्यत्वं न तदंशस्येति | ५७ | ३२ |
| अनुष्ठातव्य-शाण्डिल्यदहरादिविद्यानां वेद्यब्रह्माभिन्नत्वेन भिन्नत्वं, | ५८ | ३३ |
| आत्मनः सगुणोपासनायां एकस्य द्वयोर्बहूनाञ्च उपासनानां वैकल्पिकनियमकथनं, | ५९ | ३४ |
| विकल्पेन समुच्चयेन वा प्रतीकोपासनाया ऐच्छिकत्वं, | ६० | ३५ |
| विकल्पसमुच्चययोर्याथाकाम्यं, | ६१-६६ | ३६ |


## उक्ताध्यायस्य चतुर्थपादे ।


| | | |
|---|---|---|
| आत्मज्ञानस्य स्वतन्त्रत्वं न क्रत्वर्थत्वं, | १-१७ | १ |
| ऊर्द्धरेतोरूपाश्रमाणामस्तित्वव्यवस्थापनं, १ वर्णकं<br>लोककामिनामाश्रमिणां ब्रह्मनिष्ठानर्हत्वं, २ वर्णकं | १८-२० | २ |
| उद्गीथावयवस्योङ्कारस्य ध्येयत्वं, | २१-२२ | ३ |
| औपनिषदाख्यानानां विद्यास्तावकत्वं, | २३-२४ | ४ |
| आत्मबोधस्य कर्मानपेक्षत्वम्, | २५ | ५ |
| विद्यायाः स्वोत्पत्तौ कर्मसापेक्षत्वम्, | २६-२७ | ६ |
| आपदि सर्वान्नाभ्यनुज्ञानं | २८-३१ | ७ |
| विद्यार्थिनामाश्रमधर्माणाञ्च यज्ञादीनां सकृदनुष्ठानं, | ३२-३५ | ८ |
| अनाश्रमिणो ज्ञानसम्भावनम्, | ३६-३९ | ९ |
| आश्रमिणामवरोहाभावनिरूपणम्, | ४० | १० |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| भ्रष्टोर्द्धरेतसः प्रायश्चित्तसद्भावः,.. .. .. .. | ४१ ४२ | ११ |
| भ्रष्टोर्द्धरेतसः प्रायश्चित्तस्य आमुष्मिकशुद्धिजनकत्वं ताद्दशशुद्धिमतो व्यवहारानर्हत्वञ्च,.. .. .. | ४३ | १२ |
| उपासनस्य ऋत्विक्कर्मत्वम्, .. .. .. .. | ४४-४६ | १३ |
| मौनस्य विधेयत्वम्, .. .. .. .. .. .. | ४७-४९ | १४ |
| बाल्यस्य भावशुद्धित्वं न वयःकामचारोभयत्वम्, .. | ५० | १५ |
| इह वा जन्मान्तरे वा ज्ञानोत्पत्तिरिति ज्ञानोत्पत्तेः पाक्षिकत्वम्, .. .. .. .. .. .. | ५१ | १६ |
| सालोक्यादिमुक्तीनां जन्यत्वेन सातिशयत्वं निर्वाणमुक्तेश्च निरतिशयत्वम्, .. .. .. .. .. | ५२ | १७ |


इति तृतीयाध्यायस्य समाप्तं॥ ※॥

## फलाख्यचतुर्थपादस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| श्रवणादीनामावर्तनीयत्वम्, .. .. .. .. | १-२ | १ |
| ज्ञात्रा जीवेन स्वात्मतया ब्रह्मणो ग्राह्यत्वम्, .. .. | ३ | २ |
| प्रतीकेऽहन्दृष्ट्यभावः,.. .. .. .. .. .. | ४ | ३ |
| अब्रह्मणि प्रतीके ब्रह्मधियः कर्तव्यत्वम्, .. .. .. | ५ | ४ |
| कर्माङ्गेष्वादित्यादिदृष्टीनां कर्तव्यत्वम्, .. .. .. | ६ | ५ |
| उपासनायामासनस्य नियतत्वम्,.. .. .. .. | ७-१० | ६ |
| ध्यानसाधनस्यैकाग्र्यस्य प्रधानत्वेन दिग्देशकालानामनियमः, .. .. .. .. .. ... .. | ११ | ७ |
| उपास्तीनामामरणमावृत्तिः, .. .. .. .. | १२ | ८ |
| ज्ञानिनः पापलेपाभावः, .. .. .. .. .. .. | १३ | ९ |
| ज्ञानिनः पुण्यलेपाभावः, .. .. .. .. .. | १४ | १० |
| सञ्चितयोरिवारब्धयोः पुण्यपापयोर्ज्ञानोदयसमये विनाशाभावः,.. .. .. .. ... ... .. | १५ | ११ |
| अग्निहोत्रादिनित्यकर्मणो विद्योपयोग्यंशस्याविनाशः, | १६-१७ | १२ |
| सोपासनस्य निरुपासनस्य च नित्यकर्मणो तारतम्येन विद्यासाधनत्वम्, .. .. .. .. .. .. | १८ | १३ |
| अधिकारिणां मुक्तिसद्भावः,.. .. .. .. .. | १९ | १४ |


## उत्क्राध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| वागादीनां मनसि वृत्तिप्रविलयो न स्वरूपेण,.. .. | १-२ | १ |
| मनसः प्राणे वृत्त्या प्रविलयः, .. .. .. .. | ३ | २ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| प्राणस्य जीवे लयान्तरं पुनर्भूतेषु लयः, .. .. .. | ४-६ | ३ |
| ज्ञान्यज्ञानिनोरुत्क्रान्तेरपि साम्यं, .. .. .. | ७ | ४ |
| तेजःप्रभृतीनां भूतानां परमात्मनि वृत्त्या लयः, .. | ८-११ | ५ |
| देहादेव प्राणोत्क्रान्तेर्निषेधः, .. .. .. .. | १२-१४ | ६ |
| तत्त्वज्ञानिनो वागादीनां परमात्मनि लयः, .. .. | १५ | ७ |
| तत्त्वविदो वागादीनां निःशेषेण परमात्मनि लयः .. | १६ | ८ |
| उपासकस्योत्क्रान्तेर्विशेषवत्त्वं, .. .. .. .. | १७ | ९ |
| निशायामपि मृतानां रश्मिप्राप्तिः, .. .. .. | १८-१९ | १० |
| दक्षिणायनमृतस्योपासकस्य ज्ञानफलप्राप्तिः, .. | २०-२१ | ११ |

---

## उक्ताध्यायस्य तृतीयपादे।

| | | |
|---|---|---|
| अर्चिरादिकस्य ब्रह्मलोकमार्गस्यैकत्वम्, .. .. .. | १ | १ |
| संवत्सरादित्ययोर्मध्ये देवलोकवायुलोकौ सन्निवेशयितव्यौ, ... .. .. .. .. .. .. .. | २ | २ |
| वरुणादीनां सन्निवेशादर्चिरादिमार्गस्य व्यवस्थापितत्वं, | ३ | ३ |
| अर्चिरादीनामातिवाहिकत्वं, .. .. .. .. | ४-६ | ४ |
| उत्तरमार्गेण कार्यब्रह्मगमनं, .. .. ... .. | ७-१४ | ५ |
| प्रतीकोपासकानां ब्रह्मलोकाऽप्रापणं, .. .. .. | १५-१६ | ६ |

---

## उक्ताध्यायस्य चतुर्थपादे।

| | | |
|---|---|---|
| मुक्तिरूपस्य वस्तुनः पुरातनत्वं, ... .. .. .. | १-३ | १ |
| मुक्तस्य ब्रह्मणोऽभिन्नत्वं, .. .. .. .. .. | ४ | २ |

| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| मुक्तस्वरूपभूतस्य ब्रह्मणो युगपत् सविशेषत्वनिर्विशेषत्वे, | ५-७ | ३ |
| अर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तस्योपासकस्य भोग्यवस्तूनां सृष्टौ मानससङ्कल्पस्यैव हेतुत्वं, .. .. | ८-९ | ४ |
| एकस्यापि पुरुषस्य देहभावाभावयोरैच्छिकत्वं, .. | १०-१४ | ५ |
| सर्वेषां देहानां सात्मकत्वम्, .. .. .. .. | १५-१६ | ६ |
| ब्रह्मलोकगतानामुपासकानां जगत्सृष्टौ स्वातन्त्र्याभावेऽपि भोगमोक्षयोस्तेषां स्वातन्त्र्यसिद्धिः, .. .. | १७-२२ | ७ |


इति चतुर्थाध्यायस्य समाप्तम्॥ ※ ॥

---

# शुद्धिपत्रं।

| पृष्ठाङ्कः | पंक्त्यङ्कः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ९९ | ५ | प्रपञ्चयिष्यतेर्न | प्रपञ्चयिष्यते न |
| | ११ | स्नात्त्वा | स्नात्वा |
| १०१ | १० | वन्न | बन्न |
| १०२ | २२ | ज्योतिष्ठोमे | ज्योतिष्टोमे |
| १०३ | १८ | विप्रलिप्सुईष्ट | विप्रलिप्सुरिष्ट |
| ११५ | १३ | बऊक्तत्वो | बऊकत्वो |
| ११९ | २२ | आनव्द्मयो | आनन्द्मयो |
| १२५ | ६ | वाङ्मनस | वाङ्मनस |
| १४७ | ५ | मर्य्यादत्वं | मर्य्यादात्वं |
| | १४ | प्रत उपासीत | इत्युपासीत |
| १४८ | ८ | गृहीतव्यं | ग्रहीतव्यं |
| १५९ | १६ | कारसं | कारणं |
| १६० | १३ | रागादिभि | वागादिभिः |
| १६५ | २७ | प्रत्यक्‌ब्रह्म | प्रत्यग्‌ब्रह्म |
| १९३ | ११ | पुगरयं | पुनरयं |
| १७६ | ९ | तत्वमस्यहं | तत्त्वमस्यहं |
| १८० | १८ | पिबत् | पिवत् |
| १८३ | १० | द्रष्टव्य | द्रष्टव्य |
| १९७ | ७ | द्रष्ट्वा | द्रष्टा |
| २०५ | ७ | दिवो | दियो |
| २१९ | २२ | नेतव्यमितित्याह | नेतव्यमित्याह |

ॐ नमो गणेशाय ।

यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत् पदं ।
तमहमाशु हरिं परमाश्रये जनकजावरमनन्तसुखाकृतिं ॥ १ ॥
श्रीगौर्य्या सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदं
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना ।
वन्दे चर्म्मकपालिकोपकरणैर्वैराग्यसौख्यात् परं
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवं ॥ २ ॥
यत्कृपालवमात्रेण मूको भवति पण्डितः ।
वेदशास्त्रशरीरान्तां वाणीं वीणाकरांभजे ॥ ३ ॥
कामाक्षीदत्तदुग्धप्रचुरसुरनुतप्राज्यभोज्याधिपूज्य-
श्रीगौरीनायकाभित्प्रकटनशिवरामार्य्यलब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभावाञ्चितोऽस्य
श्रीमद्गोविन्दवाणीचरणकमलगो निर्वृतोऽहं यथालिः ॥ ४ ॥
श्रीशङ्करं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतञ्च वच्मि ।
श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायं ॥ ५ ॥
विस्तृतग्रन्थवीक्षायामलसं यस्य मानसं ।
व्याख्या तदर्थमारब्धा भाष्यरत्नप्रभाभिधा ॥ ६ ॥
श्रीमच्छारीरकं भाष्यं प्राप्य वाक् शुद्धिमाप्नुयात् ।
इति श्रमो मे सफलो गङ्गां रथ्योदकं यथा ॥ ७ ॥
यदज्ञानसमुद्भूतमिन्द्रजालमिदं जगत् ।
सत्यज्ञानसुखानन्तं तदहं ब्रह्म निर्भयं ॥ ८ ॥

इह खलु "स्वाध्यायोऽध्येतव्य" इति नित्याध्ययनविधिनाऽधीतसाङ्गस्वाध्याये "तद्विजिज्ञासस्व" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इति श्रवणविधिरुपलभ्यते। तस्यार्थः। अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्त्तव्य इति। तेन काम्येन नियमविधिनाऽर्थादेवा*त्मशास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः। तत्र कश्चिदिह जन्मनि जन्मान्तरे वानुष्ठितयज्ञादिभिर्नितान्तं निर्मलस्वान्तोऽस्य श्रवणविधेः को विषयः? किं फलं? कोऽधिकारी? कः सम्बन्धः? इति जिज्ञासते। तं जिज्ञासुमुपलभमानो भगवान् बादरायणस्तदनुबन्धचतुष्टयं श्रवणात्मकशास्त्रारम्भप्रयोजकं न्यायेन निर्णेतुमिदं सूत्रं रचयाञ्चकार "अथातो ब्रह्मजिज्ञासा" इति।

नन्वनुबन्धजातं विधिसन्निहितार्थवादवाक्यैरेव ज्ञातुं शक्यं। तद्यथा "इह कर्म्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत" इति श्रुत्या "यत् कृतकं तदनित्यं" इति न्यायवत्या "न जायते म्रियते वा विपश्चित्" "यो वै भूमा तदमृतमन्यदार्त्तं" इत्यादिश्रुत्या च भूमात्मा नित्यस्ततोऽन्यदनित्यमिति विवेको लभ्यते। कर्म्मणा कृष्यादिना चितः सम्पादितः सस्यादिर्लोको भोग्य इत्यर्थः। विपश्चित् नित्यज्ञानस्वरूपः। "परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" "आत्मनस्तु कामाय सर्व्वं प्रियं भवति" इत्यादिश्रुत्या अनात्ममात्रे वैराग्यं लभ्यते। परीक्ष्यानित्यत्वेन निश्चित्य। अकृतो मोक्षः कृतेन कर्म्मणा नास्तीति। कर्म्मतत्फलेभ्यः वैराग्यं प्राप्नवानित्यर्थः। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्" इति श्रुत्या शमादिषट्कं लभ्यते। "समाहितो भूत्वा" इति काण्वपाठः। उपरतिः सन्न्यासः। "न च पुनरावर्त्तत" इति स्वयंज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते। तथा च विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यं। यथा "एता रात्रीरुपयन्तीति" रात्रिसत्रविधौ प्रतितिष्ठन्तीत्यर्थवादस्थप्रतिष्ठा कामस्तद्वत्। तथा "श्रोतव्य" इत्यत्र प्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः। विचारस्य वेदान्ता विषय इति शक्यं ज्ञातुं। "आत्मा द्रष्टव्य"

---

* अर्थाङ्क्षिन्ना इति ७३५ संख्याक पुस्तकपाठः।

इत्यद्वैतात्मदर्शनमुद्दिश्य "श्रोतव्य" इति विचारविधानात्। न हि विचारः साक्षाद्दर्शनहेतुः अप्रमाणत्वात् अपि तु प्रमाणविषयत्वेन। प्रमाणञ्चाद्वैतात्मनि वेदान्ता एव। "तन्त्वौपनिषदं पुरुषं" "वेदान्तविज्ञानसुनिश्चितार्था" इति श्रुतेः। वेदान्तानाञ्च प्रत्यग्ब्रह्मैक्यं विषयः "तत्त्वमसि" "अहं ब्रह्मास्मि" इति श्रुतेः। एवं विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः "तरति शोकमात्मवित्" "ब्रह्मविद् ब्रह्मैव भवति" इत्यादि श्रुतेः। तथा सम्बन्धोऽप्यधिकारिणा विचारस्य कर्त्तव्यतारूपः फलस्य प्राप्यतारूप इति यथायोगं सुबोधः। तस्मादिदं सूत्रं व्यर्थमिति चेत्। न। तासामधिकार्य्यादिश्रुतीनां स्वार्थे तात्पर्य्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशेषणवानधिकारी उतान्यः? किं वेदान्ताः पूर्व्वतन्त्रेण गतार्था अगतार्था वा? किं ब्रह्म प्रत्यगभिन्नं न वा? किं मुक्तिः स्वर्गादिवत् लोकान्तरमात्मस्वरूपा वेति संशयानिवृत्तेः। तस्मादागमवाक्यैरापाततः प्रतिपन्नाधिकार्य्यादिनिर्णयार्थमिदं सूत्रमावश्यकं। तदुक्तं प्रकाशात्मश्रीचरणैः। "अधिकार्य्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रं" इति। येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्य्यादिनिर्णयानपेक्षणात् सूत्रं व्यर्थमित्यापतति इत्यलं प्रसङ्गेन।

तथा चास्य सूत्रस्य श्रवणविध्यपेक्षिताधिकार्य्यादिश्रुतिभिः स्वार्थनिर्णयायोत्थापितत्वात् हेतुहेतुमद्भावश्रुतिसङ्गतिः। शास्त्रारम्भहेत्वनुबन्धनिर्णायकत्वेनोपोद्घातत्वाच्छास्त्रादौ सङ्गतिः। अधिकार्य्यादिश्रुतीनां स्वार्थे समन्वयोक्तेः समन्वयाध्यायसङ्गतिः। "ऐतदात्म्यमिदं सर्व्वं" "तत् सत्यं" "स आत्मा" "तत्त्वमसि" इत्यादिश्रुतीनां सर्व्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां विषयादौ समन्वयोक्तेः पादसङ्गतिः। एवं सर्व्वसूत्राणां श्रुत्यर्थनिर्णायकत्वात् श्रुतिसङ्गतिः। तत्तदध्याये तत्तत्पादे च समानप्रमेयत्वेन सङ्गतिरूहनीया। प्रमेयञ्च कृत्स्नशास्त्रस्य ब्रह्म, अध्यायानां तु समन्वयाविरोधसाधनफलानि। तत्र प्रथमपादस्य स्पष्टब्रह्मलिङ्गानां समन्वयः प्रमेयः। द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानां। चतुर्थपादस्य पदमात्रसमन्वय इति भेदः। अस्याधिकरणस्य प्राथम्यान्नाधिकरणसङ्गतिरपेक्षिता।

अथाधिकरणमारभ्यते। "श्रोतव्य" इति विहितश्रवणात्मकं वेदान्तमीमांसाशास्त्रं विषयः। तत् किमारब्धव्यं न वेति विषयप्रयोजनसम्भ-

दासम्भवाभ्यां संशयः। तत्र "नाहं ब्रह्म" इति भेदग्राहिप्रत्यक्षेण कर्तृत्वाकर्तृत्वादिविरुद्धधर्म्मवत्त्वलिङ्गकानुमानेन च विरोधेन ब्रह्मात्मनोरैक्यस्य विषयस्यासम्भवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासम्भवान्नारम्भणीयमिति प्राप्ते सिद्धान्तः "अथातो ब्रह्मजिज्ञासा" इति। अत्र श्रवणविधिसमानार्थत्वाच "कर्त्तव्या" इति पदमध्याहर्त्तव्यं। अध्याहृतञ्च भाष्यकृता "ब्रह्मजिज्ञासा कर्त्तव्या" इति। तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्त्तव्यत्वानन्वयात् प्रकृत्या फलीभूतं ज्ञानमजहल्लक्षणयोच्यते। प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया। तथा च "ब्रह्मज्ञानाय विचारः कर्त्तव्य" इति सूत्रस्य श्रौतार्थः सम्पद्यते। तत्र ज्ञानस्य स्वतः फलत्वायोगात् प्रमातृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्त्तकत्वेनैव फलत्वं वक्तव्यं। तच्चानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात् सूचितं। तच्च शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः। तथा हि शास्त्रमारब्धव्यं विषयप्रयोजनवत्त्वाद् भोजनादिवत्। शास्त्रं प्रयोजनवद् बन्धनिवर्त्तकज्ञानहेतुत्वात् "रज्जुरियं" इत्यादिवाक्यवत्। बन्धो ज्ञाननिवर्त्त्योऽध्यस्तत्वात् रज्जुसर्पवत्, इति प्रयोजनसिद्धिः। एवमर्थाद् ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्तिं फलं सूत्रयन् जीवब्रह्मणोरैक्यं विषयमप्यर्थात् सूचयति। अन्यज्ञानादन्यत्र भ्रमानिवृत्तेः। जीवो ब्रह्माभिन्नः तज्ज्ञाननिवर्त्त्याध्यासाश्रयत्वात्, यदित्थं तत्तथा यथा शुक्त्यभिन्न इदमंश इति। विषयसिद्धिहेतुरध्यास इत्येवं विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति। अत्र पूर्व्वपक्षे बन्धस्य सत्यत्वेन ज्ञानादनिवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलं। सिद्धान्ते ज्ञानादेव मुक्तिरिति विवेकः। इति सर्व्वं मनसि निधाय ब्रह्मसूत्राणि व्याख्यातुकामो भगवान् भाष्यकारः सूत्रेण विचारकर्त्तव्यतारूपश्रौतार्थान्यथानुपपत्त्याऽर्थात् सूचितं विषयप्रयोजनवत्त्वमुपोद्घातत्वात् तत्सिद्धिहेत्वध्यासाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति "युष्मदस्मत्प्रत्ययगोचरयोः" इति। एतेन सूत्रार्थास्पर्शित्वादध्यासग्रन्थो न भाष्यमिति निरस्तं। आर्थिकार्थस्पर्शित्वात्।

यत्तु मङ्गलाचरणाभावादव्याख्येयमिदं भाष्यमिति। तन्न। सुतरामितरेतरभावानुपपत्तिरित्यन्तभाष्यरचनार्थं तदर्थस्य सर्व्वोपद्रवरहितस्य विज्ञानघनप्रत्यगर्थस्य तत्त्वस्य स्मृतत्वात्। अतो निर्दोषत्वादिदं भाष्यं व्याख्येयं॥

ॐ नमो भगवते वासुदेवाय ॥

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्वि-

---

लोके शुक्ताविदं रजतमिति भ्रमः सत्यरजते इदं रजतमित्यधिष्ठानसामान्यारोप्यविशेषयोरैक्यप्रमाहितसंस्कारजन्यो दृष्ट इति। अत्राप्यात्मन्यनात्माहङ्काराध्यासे पूर्व्वं प्रमा वाच्या, सा चात्मानात्मनोर्वास्तवैक्यमपेक्षते, न हि तदस्ति। तथा हि आत्मानात्मानावैक्यशून्यौ परस्परैक्यायोग्यत्वात् तमःप्रकाशवदिति मत्वा हेतुभूतं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च साधयति॥ युष्मदस्मत्प्रत्ययगोचरयोरिति॥ न च "प्रत्ययोत्तरपदयोश्च" इति [पा०७।२।९८] सूत्रेण "प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोर्मपर्य्यन्तस्य त्वमादेशौ स्त" इति विधानात् "त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्र" इतिवत् "त्वन्मत्प्रत्ययगोचरयोः" इति स्यादिति वाच्यं। "त्वमावेकवचने" [पा० ७।२।९७] इत्येकवचनाधिकारात्। अत्र च युष्मदस्मदोरेकार्थवाचित्वाभावादनात्मनां युष्मदर्थानां बहुत्वादस्मदर्थचैतन्यस्याप्युपाधितो बहुत्वात्।

नन्वेवं सति कथमत्र भाष्ये विग्रहः? न च "यूयमिति प्रत्ययो युष्मत्प्रत्ययः वयमिति प्रत्ययोऽस्मत्प्रत्ययस्तद्गोचरयोरिति विग्रह" इति वाच्यं। शब्दसाधुत्वेऽप्यर्थासाधुत्वात्। न ह्यहङ्काराद्यनात्मनो यूयमिति प्रत्ययविषयत्वमस्तीति चेत्। न। गोचरपदस्य योग्यतापरत्वात्। चिदात्मा तावदस्मत्प्रत्यययोग्यः। तत्प्रयुक्तसंशयादिनिवृत्तिफलभाक्त्वात्, न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वादिति भाष्योक्तेश्च। यद्यप्यहङ्कारादिरपि तद्योग्यस्तथापि चिदात्मनः सकाशादत्यन्तभेदसिद्ध्यर्थं युष्मत्प्रत्यययोग्य इत्युच्यते।

आश्रमश्रीचरणास्तु टीकायोजनायामेवमाहुः। "सम्बोध्यचेतनो युष्मत्पदवाच्यः, अहङ्कारादिविशिष्टचेतनोऽस्मत्पदवाच्यः, तथा च युष्मदस्मदोः स्वार्थे प्रयुज्यमानयोरेव त्वमादेशनियमो न लाक्षणिकयोः "युष्मदस्मदोः षष्ठी चतुर्थी द्वितीयास्थयोर्व्वान्नावाविति"[पा०८।१।२०] सूत्रासाङ्गत्यप्रसङ्गात् अत्र शब्दलक्षकयोरिव चिन्मात्रजडमात्रलक्षकयोरपि न त्वमादेशो लक्षकत्वाविशेषादिति"। यदि तयोः शब्दबोधकत्वे सत्येव त्वमादेशाभाव इत्यनेन सूत्रेण ज्ञापितं तदाऽस्मिन् भाष्ये

रुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्म्माणामपि

युष्मत्पदेन युष्मच्छब्दजन्यप्रत्यययोग्यः परागर्थो लक्ष्यते, अस्मच्छब्दजन्यप्रत्यययोग्यः प्रत्यगात्मा। तथा च लक्षतावच्छेदकतया शब्दोऽपि बोध्यत इति न त्वमादेशः। न च पराक्त्वप्रत्यक्त्वयोरेव लक्ष्यतावच्छेदकत्वं न शब्दयोग्यत्वांशस्य गौरवादिति वाच्यं। पराक्प्रतीचोर्विरोधस्फुरणार्थं विरुद्धशब्दयोग्यत्वस्यापि वक्तव्यत्वात्। अत एवेदमस्मत्प्रत्ययगोचरयोरिति वक्तव्येऽपीदंशब्दो ऽस्मदर्थे लोके वेदे च बहुशः "इमे वयमास्महे" "इमे विदेहाः" "अयमहमस्मि" इति च प्रयोगदर्शनात् नास्मच्छब्दविरोधीति मत्वा युष्मच्छब्दः प्रयुक्तः। इदंशब्दप्रयोगे विरोधास्फूर्त्तेः। एतेन चेतनवाचित्वादस्मच्छब्दः पूर्व्वं प्रयोक्तव्यः "अभ्यर्हितं पूर्व्वमिति न्यायात्" "त्यदादीनि सर्व्वैर्नित्यमिति" [पा०१।२।७२] सूत्रेण विहित एकशेषश्च स्यादिति निरस्तं। "युष्मदस्मदोरिति" सूत्र इवात्रापि पूर्व्वनिपातैकशेषयोरप्राप्तेः, एकशेषे विवक्षितविरोधास्फूर्त्तेश्च। वृद्धास्तु "युष्मदर्थादनात्मनो निष्कृष्य शुद्धस्य चिद्धातोरध्यारोपापवादन्यायेन ग्रहणं द्योतयितुमादौ युष्मद्ग्रहणं" इत्याहुः। तत्र युष्मदस्मत्पदार्थाभ्यां पराक्प्रत्यक्त्वेनात्मानात्मनोर्वस्तुतो विरोध उक्तः॥

प्रत्ययपदेन प्रतीतितो विरोध उक्तः। प्रतीयत इति प्रत्ययो ऽहङ्कारादिरनात्मा दृश्यतया भाति, आत्मा तु प्रतीतित्वात् प्रत्ययः स्वप्रकाशतया भाति। गोचरपदेन व्यवहारतो विरोध उक्तः। युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्त्ताहमित्यादिव्यवहारगोचरः, अस्मदर्थस्त्वमात्मप्रविलापेन "अहं ब्रह्मेति" व्यवहारगोचर इति त्रिधा विरोधः स्फुटीकृतः। युष्मचास्मच युष्मदस्मदी, ते एव प्रत्ययौ च तौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ तयोस्त्रिधा विरुद्धस्वभावयोरितरेतरभावो ऽत्यन्ताभेदस्तादात्म्यं वा तदनुपपत्तौ सिद्धायामित्यन्वयः। ऐक्यासम्भवेऽपि शुक्लो घट इतिवत्तादात्म्यं किं न स्यादित्यत आह॥ विषयविषयिणोरिति॥ चिज्जडयोर्विषयविषयित्वाद्दीपघटयोरिव न तादात्म्यमिति भावः। युष्मदस्मदी पराक्प्रत्यग्वस्तुनी, ते एव प्रत्ययश्च गोचरश्चेति विग्रहः। अत्र प्रत्ययगोचरपदाभ्यां आत्मानात्मनोः प्रत्यक्पराग्भावे चिदचित्त्वं हेतुरुक्तः, तत्र हेतुमाह विषयविषयिणोरिति।

सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि

---

अनात्मनो ग्राह्यत्वादचित्त्वं आत्मनस्तु ग्राहकत्वाच्चित्त्वं वाच्यं। अचित्त्वे स्वस्य स्वेन ग्रहस्य कर्म्मकर्तृत्वविरोधेनासम्भवादप्रत्यक्षत्वापत्तेरित्यर्थः। यथेष्टं वा हेतुहेतुमद्भावः। नन्वेवमात्मानात्मनोः पराक्प्रत्यक्त्वेन चिदचित्त्वेन ग्राह्यग्राहकत्वेन च विरोधात् तमःप्रकाशवदैक्यस्य तादात्म्यस्य वानुपपत्तौ सत्यां तत्प्रमित्यभावेनाध्यासाभावेऽपि तद्धर्म्माणां चैतन्यसुखजाड्यदुःखादीनां विनिमयेनाध्यासोऽस्त्वित्यत आह॥ तद्धर्म्माणामपीति॥ तयोरात्मानात्मनोर्धर्म्मास्तद्धर्म्मास्तेषामपि इतरेतरभावानुपपत्तिः। इतरत्र धर्म्मान्तरे इतरेषां धर्म्माणां भावः संसर्गस्तस्यानुपपत्तिरित्यर्थः। न हि धर्म्मिणोः संसर्गं विना धर्म्माणां विनिमयोऽस्ति। स्फटिके लोहितवस्तुसान्निध्यात् लौहित्यधर्म्मसंसर्गः। असङ्गात्मधर्म्मिणः केनाऽप्यसंसर्गाद्धर्म्मिसंसर्गपूर्व्वको धर्म्मसंसर्गः कुतस्त्य इत्यभिप्रेत्योक्तं॥ सुतरामिति॥ नन्वात्मानात्मनोस्तादात्म्यस्य तद्धर्म्मसंसर्गस्य चाभावेऽप्यध्यासः किं न स्यादित्यत आह॥ इत्यत इति॥ इत्युक्तरीत्या तादात्म्याद्यभावेन तत्प्रमाया अभावादतः प्रमाजन्यसंस्कारस्याध्यासहेतोरभावादध्यासो मिथ्येति भवितुं युक्तमित्यन्वयः। मिथ्याशब्दो द्व्यर्थः, अपह्नववचनः अनिर्वचनीयतावचनश्चेति। अत्र चापह्नवार्थः। ननु कुत्र कस्याध्यासोऽपह्नूयते इत्याशङ्क्य आत्मन्यनात्मतद्धर्म्माणां अनात्मन्यात्मतद्धर्म्माणामध्यासो निरस्यत इत्याह॥ अस्मत्प्रत्ययगोचर इत्यादिना॥ अहमितिप्रत्यययोग्यत्वं बुद्ध्यादेरप्यस्तीति मत्वा तत आत्मानं विवेचयति॥ विषयिणीति॥ बुद्ध्यादिसाक्षिणीत्यर्थः। साक्षित्वे हेतुः॥ चिदात्मक इति॥ अहमिति भासमाने चिदंशात्मनीत्यर्थः॥ युष्मत्प्रत्ययगोचरस्येति॥ त्वंकारयोग्यस्य इदमर्थस्येति यावत्। नन्वहमिति भासमानबुद्ध्यादेः कथमिदमर्थत्वमित्यत आह॥ विषयस्येति॥ साक्षिभास्यस्येत्यर्थः। साक्षिभास्यत्वरूपलक्षणयोगाद् बुद्ध्यादेर्घटादिवदिदमर्थत्वं न प्रतिभासत इति भावः। अथ वा यदात्मनो मुख्यं सर्व्वान्तरत्वरूपं प्रत्यक्त्वं प्रतीतित्वं ब्रह्मास्मीति व्यवहारगोचरत्वं चोक्तं तदसिद्धं, अहमिति प्रतीयमानत्वात् अहङ्कारवदित्याशङ्क्याह॥ अस्मत्प्रत्ययगोचर इति॥ अस्मच्चासौ प्रत्ययश्चासौ गोचरश्च तस्मिन्नित्यर्थः। अहंवृत्तिव्य-

चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः ।

---

स्फुरणत्वं स्फुरणविषयत्वं वा हेतुः । आद्ये दृष्टान्ते हेत्वसिद्धिः । द्वितीये तु पक्षे तदसिद्धिरित्यात्मनो मुख्यं प्रत्यक्षादि युक्तमिति भावः । ननु यदात्मनो विषयित्वं तदसिद्धं "अनुभवामि" इति शब्दवत्त्वात् अहङ्कारवदित्यत आह ॥ विषयिणीति ॥ वाच्यत्वं लक्ष्यत्वं वा हेतुः । नाद्यः । पक्षे तदसिद्धेः । नान्त्यः । दृष्टान्ते तद्वैकल्यादिति भावः । "देहं जानामि" इति देहाहङ्कारयोर्विषयविषयित्वेऽपि मनुष्योऽहमित्यभेदाध्यासवदात्माहङ्कारयोरप्यध्यासः स्यादित्यत आह ॥ चिदात्मक इति ॥ तयोर्जाड्याल्पत्वाभ्यां सादृश्यादध्यासेऽपि चिदात्मन्यनवच्छिन्ने जडाल्पाहङ्कारादेर्नाध्यास इति भावः । "अहं" इति भास्यत्वादात्मवदहङ्कारस्यापि प्रत्यक्षादिकं मुख्यमेव, ततः पूर्वोक्तपरोक्षाद्यसिद्धिरित्याशङ्क्याह ॥ युष्मदिति ॥ अहंवृत्तिभास्यत्वमहङ्कारे नास्ति कर्तृकर्म्मत्वविरोधात्, चिद्भास्यत्वं चिदात्मनि नास्ति इति हेत्वसिद्धिः । अतो बुद्ध्यादेः प्रतिभासतः प्रत्यक्षेऽपि परोक्षादिकं मुख्यमेवेति भावः । युष्मत् पराक् तच्चासौ प्रतीयत इति प्रत्ययश्चासौ कर्तृत्वादिव्यवहारगोचरश्च तस्येति विग्रहः । तस्य हेयत्वार्थमाह ॥ विषयस्येति ॥ षिञ् बन्धने । विषिणोति बध्नाति इति विषयस्तस्येत्यर्थः । आत्मन्यनात्मतद्धर्म्माध्यासो मिथ्या भवतु, अनात्मन्यात्मतद्धर्म्माध्यासः किं न स्यात्? "अहं स्फुरामि" "सुखी" इत्याद्यनुभवादित्याशङ्क्याह ॥ तद्विपर्य्ययेणेति ॥ तस्मादनात्मनो विपर्य्ययो विरुद्धस्वभावश्चैतन्यं, इत्थम्भावे तृतीया । चैतन्यात्मना विषयिणस्तद्धर्म्माणाञ्च योऽहङ्कारादौ विषयेऽध्यासः स मिथ्येति नास्तीति भवितुं युक्तं अध्याससामग्र्यभावात् । न ह्यत्र पूर्वप्रमाहितसंस्कारः सादृश्यमज्ञानं वास्ति । निरवयवनिर्गुणस्वप्रकाशात्मनिर्गुणावयवसादृश्यस्य चाज्ञानस्य चायोगात् ।

नन्वात्मनो निर्गुणत्वे तद्धर्म्माणामिति भाष्यं कथमिति चेत् । उच्यते । बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं विषयाभेदेनाभिव्यक्तं स्फुरणं । शुभकर्म्मजन्यवृत्तिव्यक्तमानन्द इत्येवं वृत्त्युपाधिकृतभेदात् ज्ञानादीनामात्मधर्म्मत्वव्यपदेशः । तदुक्तं टीकायां "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्म्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त" इति । अतो

तद्विपर्य्ययेण विषयिणस्तद्धर्म्माणाञ्च विषयेऽध्यासो मिथ्येति भवितुं युक्तं। तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्म्मांश्चाध्यस्येतरेतरा*विवेकेनात्यन्तविविक्तयोर्धर्म्मधर्म्मिणोर्मिथ्याज्ञाननि-

---

निर्गुणब्रह्मात्मत्वमते "अहङ्करोमि" इति प्रतीतेरर्थस्य चाध्यासत्वायोगात् प्रमात्वं। "अहं नर इति सामानाधिकरण्यस्य गौणत्वमिति" मतमास्थेयं। तथा च बन्धस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासम्भवाद् बद्धमुक्तयोर्जीवब्रह्मणोरैक्यायोगेन विषयासम्भवात् शास्त्रं नारम्भणीयमिति पूर्व्वपक्षभाष्यतात्पर्य्यं। युक्तंग्रहणात् पूर्व्वपक्षस्य दुर्बलत्वं सूचयति। तथा हि किमध्यासस्य नास्तित्वमयुक्तत्वादभानाद्वा कारणाभावाद्वा? आद्य इष्ट इत्याह॥ तथापीति॥ एतदनुरोधादादौ यद्यपीति पठितव्यं। अध्यासस्यासङ्गस्वप्रकाशात्मन्ययुक्तत्वमलङ्कार इति भावः। न द्वितीय इत्याह॥ अयमिति॥ "अज्ञः कर्त्ता मनुष्योऽहं" इति प्रत्यक्षानुभवादध्यासस्याभानमसिद्धमित्यर्थः। न चेदं प्रत्यक्षं कर्तृत्वादौ प्रमेति वाच्यं। अपौरुषेयतया निर्द्दोषेणोपक्रमादिलिङ्गावधृततात्पर्य्येण च "तत्त्वमस्यादि" वाक्येनाकर्तृब्रह्मबोधनेनास्य भ्रमत्वनिश्चयात्। न च ज्येष्ठप्रत्यक्षविरोधादागमज्ञानस्यैव बाध इति वाच्यं देहात्मवादप्रसङ्गात्। "मनुष्योऽहं" इति प्रत्यक्षविरोधेन "अथायमशरीर" इत्यादिश्रुत्या देहान्यात्मासिद्धेः। "तस्मादिदं रजतं" इति वत् सामानाधिकरण्यप्रत्यक्षस्य भ्रमत्वशङ्काकलङ्कितस्य नागमात् प्राबल्यमित्यास्थेयं। किञ्च ज्येष्ठत्वं पूर्व्वभावित्वं वा? आगमज्ञानं प्रत्युपजीव्यत्वं वा? आद्ये न प्राबल्यं। ज्येष्ठस्यापि रजतभ्रमस्य पश्चाद्भाविना शुक्तिज्ञानेन बाधदर्शनात्। न द्वितीयः। आगमज्ञानोत्पत्तौ प्रत्यक्षादिमूलवृद्धव्यवहारे च संगतिग्रहद्वारा शब्दोपलब्धिद्वारा च प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्योपजीव्यत्वेऽपि तात्त्विकप्रामाण्यस्यानपेक्षितत्वादनपेक्षितांशस्यागमेन बाधसंभवादिति।

यत्तु क्षणिकयागस्य श्रुतिबलात् कालान्तरभाविफलहेतुत्ववत् "तथा विद्वान्नामरूपाद्विमुक्त" इति श्रुतिबलात् सत्यस्यापि ज्ञाना-

---

* विवेकेणात्यन्तविविक्तये : मु॰ पु॰ पाठः।

भिन्नः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं

न्निवृत्तिसम्भवादध्यासवर्णनं व्यर्थमिति तन्न। ज्ञानमात्रनिवर्त्त्यस्य क्वापि सत्यत्वादर्शनात्, सत्यस्य चात्मनो निवृत्त्यदर्शनाच्च, अयोग्यतानिश्चये सति सत्यबन्धस्य ज्ञानान्निवृत्तिश्रुतेर्बोधकत्वायोगात्। न च सेतुदर्शनात् सत्यस्य पापस्य नाशदर्शनान्नायोग्यतानिश्चय इति वाच्यं। तस्य श्रद्धानियमादिसापेक्षज्ञाननाश्यत्वात्, बन्धस्य च "नान्यः पन्था" इति श्रुत्या ज्ञानमात्रान्निवृत्तिप्रतीतेः। अतः श्रुतज्ञाननिवर्त्त्यत्वनिर्वाहार्थमध्यस्तत्वं वर्णनीयं। किञ्च ज्ञानैकनिवर्त्त्यस्य किं नाम सत्यत्वं? न तावदज्ञानाजन्यत्वं। "मायान्तु प्रकृतिं" इति श्रुतिविरोधात् मायाविद्ययोरैक्यात्। नापि स्वाधिष्ठाने स्वाभावशून्यत्वं। "अस्थूलं" इत्यादि निषेधश्रुतिविरोधात्। नापि ब्रह्मवद्बाधायोग्यत्वं ज्ञानान्निवृत्तिश्रुतिविरोधात्। अथ व्यवहारकाले बाधशून्यत्वं। तर्हि व्यावहारिकमेव सत्यत्वमित्यागत*मध्यस्तत्वं। तच्च श्रुत्यर्थे योग्यताज्ञानार्थं वर्णनीयमेव यागस्यापूर्व्वद्वारत्ववत्। न च तदनन्यत्वाधिकरणे तस्य वर्णनात् पौनरुक्त्यं। तत्रोक्ताध्यासस्यैव प्रत्यक्त्वविषयादिसिद्ध्यर्थमादौ स्मार्य्यमाणत्वादिति दिक्। अध्यासं द्वेधा दर्शयति॥ लोकव्यवहार इति॥ लोक्यते मनुष्योऽहमित्यभिमन्यत इति लोकोऽर्थाध्यासः तद्विषयो व्यवहारोऽभिमान इति ज्ञानाध्यासो दर्शितः। द्विविधाध्यासस्वरूपलक्षणमाह॥ अन्योन्यस्मिन्नित्यादिना धर्म्मधर्म्मिणोरित्यन्तेन॥ जाड्यचैतन्यादिधर्म्माणां धर्म्मिणावहङ्कारात्मानौ तयोरत्यन्तं भिन्नयोरितरेतरभेदाग्रहेणान्योन्यस्मिन् अन्योन्यतादात्म्यं अन्योन्यधर्म्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इति योजना। अतः "सोऽयं" इति प्रमाया नाध्यासत्वं तदिदमर्थयोः कालभेदेन कल्पितभेदेऽपि अत्यन्तभेदाभावात्,इति वक्तुमत्यन्तेत्युक्तं। न च धर्म्मितादात्म्याध्यासे धर्म्माध्याससिद्धेः "धर्म्मांश्चेति" व्यर्थमिति वाच्यं। अन्धत्वादीनामिन्द्रियधर्म्माणां धर्म्म्यध्यासास्फुटत्वेऽप्यन्धोऽहमिति स्फुटोऽध्यास इति ज्ञापनार्थत्वात्। नन्वात्मानात्मनोः परस्पराध्यस्तत्वे शून्यवादः स्यादित्याशङ्क्याह॥ सत्यानृते मिथुनीकृत्येति॥ सत्यमनिदं चैतन्यं, तस्यानात्मनि संसर्गमात्राध्यासो न स्वरू-

* सत्यत्वमित्यध्यस्तत्वमिति १६६ सं० पुस्तकपाठः।

पस्य। अन्दतं युष्मदर्थः तस्य स्वरूपतोऽप्यध्यासात् तयोर्मिथुनीकरण-मध्यास इति न न्यूनतेत्यर्थः।

नन्वध्यासमिथुनीकरणलोकव्यवहारशब्दानामेकार्थत्वेऽध्यस्य मिथु-नीकृत्येति पूर्व्वकालत्ववाचि "त्वा" प्रत्ययादेशस्य ल्यपः कथं प्रयोग इति चेन्न अध्यासव्यक्तिभेदात्। तत्र पूर्व्वपूर्व्वाध्यासस्योत्तरोत्तराध्यासं प्रति संस्कारद्वारा पूर्व्वकालत्वेन हेतुत्वद्योतनार्थं ल्यपः प्रयोगः। तदेव स्पष्ट-यति॥ नैसर्गिक इति॥ प्रत्यगात्मनि हेतुहेतुमद्भावेनाध्यासप्रवाहोऽना-दिरित्यर्थः। ननु प्रवाहस्यावस्तुत्वादध्यासव्यक्तीनां सादित्वात् कथम-नादित्वमिति चेत्? उच्यते। अध्यासत्वावच्छिन्नव्यक्तीनां मध्येऽन्यतमया व्यक्त्या विनाऽनादिकालस्यावर्त्तनं कार्य्यानादित्वमिति, अङ्गीकारात्। एतेन कारणाभावादिति कल्पो निरस्तः संस्कारस्य निमित्तस्य नैस-र्गिकपदेनोक्तत्वात्। न च पूर्व्वप्रमाजन्य एव संस्कारो हेतुरिति वाच्यं लाघवेन पूर्व्वानुभवजन्यसंस्कारस्य हेतुत्वात्। अतः पूर्व्वाध्यासजन्यसं-स्कारोऽस्तीति सिद्धं। अध्यासस्योपादानमाह॥ मिथ्याज्ञाननिमित्त इति॥ मिथ्या च तदज्ञानञ्च मिथ्याज्ञानं तन्निमित्तमुपादानं यस्य स तन्निमित्तस्तदुपादान इत्यर्थः। अज्ञानस्योपादानत्वेऽपि संस्फुरदात्म-तत्त्वावरकतया दोषत्वेनाहङ्काराध्यासकर्त्तृरीश्वरस्योपाधित्वेन संस्का-रकालकर्म्मादिनिमित्तपरिणामित्वेन च निमित्तत्वमिति द्योतयितुं नि-मित्तपदं। स्वप्रकाशात्मन्यसङ्गे कथमविद्यासङ्गः संस्कारादिसामग्र्यभा-वात्, इति शङ्कानिरासार्थं मिथ्यापदं। प्रचण्डमार्त्तण्डमण्डले पेचका-नुभवसिद्धान्धकारवत् "अहमज्ञ" इत्यनुभवसिद्धमज्ञानं दुरपह्नवं कल्पितस्याधिष्ठानास्पर्शित्वात् नित्यस्वरूपज्ञानस्याविरोधित्वाच्चेति। यद्वा अज्ञानं ज्ञानाभाव इति शङ्कानिरासार्थं मिथ्यापदं। मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमज्ञानस्य लक्षणं मिथ्याज्ञानपदेनोक्तं। ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति मिथ्यात्वे सती-त्युक्तं। अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्त्यबन्धेऽतिव्याप्तिनिरासाय सा-क्षादिति। अनाद्युपादानत्वे सति मिथ्यात्वं वा लक्षणं। ब्रह्मनिरासार्थं मिथ्यात्वमिति। मृदादिनिरासार्थमनादीति। अविद्यात्मनोः सम्बन्ध-निरासार्थमुपादानत्वे सतीति। संप्रति अध्यासं दृढयितुमभिलपति॥ अहमिदं ममेदमिति॥ आध्यात्मिककार्य्याध्यासेष्वहमिति प्रथमोऽध्या-सः। न चाधिष्ठानारोप्यांशद्वयानुपलम्भात् नायमध्यास इति वाच्यं।

